# अथ श्री दुर्गाष्टकम्

महादेवीं महाशक्तिं भवानीं भववल्लभाम्
भवार्तिभञ्जनकरीं वन्दे त्वां लोकमातरम्  १

भक्तप्रियां भक्तिगम्यां भक्तानां कीर्तिवर्धिकाम्
भवप्रियां सतीं देवीं वन्दे त्वां भक्तवत्सलाम्  २

अन्नपूर्णां सदापूर्णां पर्वतीं पर्वपूजिताम्
महेष्वरीं वृषारूढां वन्दे त्वां परमेश्वरीम्  ३

कालरात्रिं महारात्रिं मोहरात्रिं जनेश्वरीम्
शिवकान्तां शम्भुशक्तिं वन्दे त्वां यननीमुमाम्  ४

जगत्कर्त्रीं जगद्धात्रीं जगत्संहारकारिणीम्
मुनिभिः संस्तुतां भद्रां वन्दे त्वां मोक्षदायिनीम्  ५

देवदुःखहरामम्बां सदादेवसहायकाम्
मुनिदेवैः सदासेव्यां वन्दे त्वां देवपूजिताम्  ६

त्रिनेत्रां शङ्करीं गौरीं भोगमोक्षप्रदां शिवाम्
महामायां जगद्बीजां वन्दे त्वां जगदीश्वरीम्  ७

शरणागतजीवानां सर्वदुःखविनाशिनीम्
सुखसंपत्करां नित्यां वन्दे त्वां प्रकृतिं पराम्  ८

देव्यष्टकमिदं पुण्यं योगानन्देन निर्मितम्
यत्पठेद्भक्तिभावेन लभते सपरं सुखम्  ९